वाणीं भजत

# गैर्वाणी



## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ॰ प्र॰) भारतम्

संपुटः ६ | 15 NOVEMBER & DECEMBER 1968 | क्रमांकः ११,१२



कार्तिक मार्गशीर्षौ मासौ

शकवर्षः १८९०

मूल्यम् ४० पैसाः

# विषयसूचिका










नवांबरं मनोहरं भजे मुदा सदा हृदा ।

बलाकिकासुसेवितम्
दिशासु शालिभूषितम्
विदिक्षु चेक्षुदंडितम्
समन्ततः प्रशान्तिमत् ॥ ॥ नवांब ॥

समोष्णशीतवातकम्
सुवर्णवर्णपुष्पकम
तृणप्रतानकंचुकम्
नदीप्रवाहमंजुलम् ॥ ॥ नवांब ॥

सुपुष्टगोमहोक्षकम् ,
परोक्षमेघजालकम् ,
पयोदधीष्टभोजनम् ,
समस्तहर्षभाजनम ॥ ॥ नवांब ॥



# सम्पादकीयम्

## जीवन्तु शरदश्शतम्

कति कृतिनः ? कति सुकृतिनः ? निवेदितुं चेदनुमतोऽस्मि स्मृतिपथमायाति "एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते"। अन्यच्च, "याच्ञा मोघा वरमधिगुणे नाऽधमे लब्धकामा" । स एक एव कृती सुकृती च भवितुमर्हति यः पुनः स्वकृत्यं सुष्ठु निश्चिनोति; सुकृतं च तत् सम्पादयति। तदर्थं कियद्वा व्यय-प्रयास-भाजनं भवतु न निश्चितात स सज्जनः तिरोगच्छति। आं, एव मेवैतत - स धीरः । न निश्चितार्थात विरमन्ति धीराः ।

संस्कृतप्रचारं प्रचुरं अभिलषतां संस्कृत-शकुन्तानां अन्यतमोऽयं अस्मत्सभायाः प्रधानमन्त्रिमहोदयः श्रीमान् तिरुवेङ्कडाचार्यवर्यः ।

भारतं न तदानीं स्वतन्त्रं संवृत्तम् ; स्वतन्त्रतायाः महान उद्यमः, बहुमुखः प्रवर्तमानः प्रवर्धमानश्चासीत्तदानीं - आंग्लेय - सर्वकारस्य शासनमेव प्रवर्तमानमासीत, कांग्रेस-नायकानां अन्तराल-प्रभुत्वं (Interium period) प्रतिष्ठितमिव । किञ्चिन्न्यूनाधिकभावेन तत्समकाल एव स्वतन्त्रभारतस्य भाविनीं वृत्तिमाश्रित्य बहुत्र बहुमुखेभ्यः बहुला भाव-प्रभावाः प्रसृताः । स्वतन्त्र भाव-परम्परायाः परीवाहः प्राक् स्वतन्त्रता-प्राप्तेः स्यन्दमानः सरस्वतीव अन्तर्वहति स्म । स्वतंत्रे भारते किं वा स्यात् , किं वा स्यादिति ऊहा-पोहानां स्वर्णमयस्वप्नानां च पदे पदे संचारः प्रबलतरस्समजनि । अस्यामेव अवस्थायां देशे तत्र तत्र संस्कृतमधिकृत्यापि सहृदयपण्डितानां कतिपय-सेवा-परायणानां मनसि उदात्त-भावना जागृतिम् प्राप्तवती । राष्ट्रीय-भावना-भावितान्तःकरणानां सतामपि न तेषां मनसि पदवीप्रेप्सा, न वा यशो लिप्सा । केवलं सेवा-भावना । तद्भावनाप्रेरिताः प्रेक्षावद्वरिष्ठाः, इममेव अंशं साक्षाच्चक्रुः "स्वतन्त्र-भारते संस्कृतं, स्वतन्त्रभारते संस्कृतिः; तस्य तस्याश्च भारतस्येव स्वतन्त्रता सेत्स्यति न वा" इति ।

यदि भारते स्वतन्त्रं संपत्स्यते तर्हि संस्कृतस्य एवं संस्कृतेश्च स्वतन्त्रताऽवश्यं भाविनी - इति स्वप्नदर्शिनां बहूनां मध्ये अयमाचार्यवर्यः - न जाने कतमः स्यादिति । स्यादेवम् "बहूनामेति प्रथमः बहूनामपि मध्यमः" । यद्यपि भारते तत्र तत्र संस्कृतज्ञानां निकायाः समवायाश्च स्थिताः, परन्तु प्रचारदक्षप्रथम् स्वीकृत्य प्रवर्तमानाः संस्थाः विशिष्य दक्षिण-भारते तदानीं नकारपर्याया एव ।

श्रीमान् तिरुवेङ्कडाचार्यवर्यः भारते संस्कृते भाषाप्रचारकगोष्ठीनां मध्यंगतस्सन् "मध्यमो बहूनां" भवेद्यदि न दोषाय मध्यमत्वं, मध्यमणिन्यायेन शोभेतैव । संस्कृतभाषाप्रचारिण्याः सभायाः संस्थापकानां अग्रे यदि अयं महान् गण्येत तर्हि नूनमयं "बहूनामेति प्रथमः" । दक्षिणभारते एकैकप्रचारसंस्थां संस्कृतस्य संस्थापितवतां सर्वप्रथमोऽयं आचार्यवर्यः ।

स्वतन्त्रभारतस्येव अस्याः संस्कृतभाषाप्रचारिण्याः सभायाः दशाब्दद्वयं व्यतीतम् । सभायाः संस्थापकः, निधिपालकः प्रधानमन्त्री चायं महान् श्रीमान् तिरुवेङ्कडाचार्यः षष्ट्यब्दपूर्तिं प्रशान्तेन गतिविधिना विधाय अग्रे सरति; सभाया गति-विधिरपि अस्यैव महतो मार्गदर्शनेन अग्रे सरतु । उभयोरपि पन्थानः शिवास्सन्तु ।

इदं चेन्न विवृतं स्यात् तर्हि न मे मनस्तुष्टिर्नवा भवतां शङ्कापनोदः स्यात् यत - "नान्यं शक्रा न्न याचते" । परतन्त्रे भारते अयं आचार्यः संस्कृतप्रचाराय जनतामेव याचितवान् न प्रभुतां । भारतं स्वतन्त्रं संवृत्तमिति महता प्रमोदेन, काले काले सर्वकारं ययाचे वामन इव; परन्तु तदानीं न कोऽपि सर्वकारः महाबलिरासीत् । "याच्ञा मोघा वरमधिगुणे" इत्येव सन्तुष्टोऽयं महान् । द्विजधर्मः पालितः । यदा पुनः सर्वकारः संस्कृते महाबलिः आसीत् तदाऽयम् आचार्यः यावदर्थपरिग्रहं प्रदर्शयामास । त्रीणि पदानि अर्थितानि । एकं भवनं, द्वितीयं पत्रिका, तृतीयं परीक्षायाः मान्यताप्रदानम् । एवं त्रेधा निदधे पदम् । आचार्यवर्याणां वामनताऽपगता; त्रिविक्रमता समायाता । जयतु श्रीमान् आचार्यः, जयतु संस्कृतसभा, जयतु संस्कृतिः ।

आ० वरदराजः

# सम्मानोत्सवः

सं. भा. प्र. सभायाः चित्पुरस्थायाः विशालभवने दि. 28-10-68 इन्दुवासरे सायम् 5-00 घं. सम्मानसभा समायोजिता ।

तत्र श्रीमतां ति. कं. तिरुवेङ्कठाचार्यवर्याणां, सभायाः प्रधानमन्त्रि-महोदयानां षष्टि-पूर्तिमहोत्सवं पुरस्कृत्य सभासदस्यैः, पण्डितप्रवरैः, पुरप्रमुखैः अन्यैर्मित्रैश्च बहुभिः संभूय सप्रीति-गौरवं सबहुमानं च सन्मानकार्यं समाचरितम् ।

सन्मानसभायाः अध्यक्षस्थानात् श्रीमद्भिः शङ्करम् राघवाचार्यमहोदयैः, चित्पुर सर्वकार-कलाशालाध्यक्षैः श्रीमता आचार्यवर्याणां नम्रस्वभावं, कार्यदीक्षा-तत्परतां चाधिकृत्य सुष्ठु भाषितम् ।

सभाकार्यदर्शिमहोदयैः, श्री एन्. रामनाथार्यैः समागतानां स्वागतवचन-पूर्वकं, आचार्यवर्याणां गुण-गणान्, कार्यकुशलतां च अधिकृत्य विपुलं भाषितं, अनन्तरं राङ्कवाच्छादनेन (काश्मीरशाल) नानाविध पुष्प-फलोपहारेण च सन्मान-कार्यं बहुकृतम् ।

श्रीमता आ. वरदराजमहोदयेन ज्ये. सं. विद्यापीठाध्यक्षैः सम्प्रेषितं मंगलाशासनं पठित्वा श्रीमद्भ्यः सादरं समर्पितं । तदनन्तरं च, श्री के. मुनिरेड्डिमहोदयः, संस्कृतपण्डितः, बहूद्देशिपाठशालायाः, श्री के. रामस्वामि अय्यंगार, न्यायवादी, श्री सुब्बराघवार्यः, संस्कृतपंडितः, ज. उ. पाठशाला, श्री बालसुब्रह्मण्यम्, कार्यदर्शी, विश्वहिन्दूपरिषत, चित्तूरु, श्री तेकुमल्ल. कामेश्वरराव, प्रमुखरचयिता, इत्यादयो बहवः स्वीयभाषणैः श्रीमतां आचार्याणां गुणगणं कीर्तितवन्तः ।

अनन्तरं सभा-सम्भाविताः श्रीमन्तः ति. कं. तिरुवेङ्कटाचार्यवर्याः विंशति-वर्षेभ्यः प्राक् सभा-संस्थापने अनुभूतं क्लेशजातं, संस्कृतप्रचारे समापतितानां नानाविधानां व्यय प्रयासानां अनुवर्णनम्, गैर्वाण्याः सम्पादने विद्यमानम् अनुभवैकवेद्यमानम् च क्लेशजातम् सभायां समागतानां सदस्यानां सम्मुखे सन्ग्रहेण समुक्षिप्तवन्तः ।

अन्ते च सभायां समागताः सर्वेऽपि सदस्याः, पंडिताः, पुरप्रमुखाश्च कृतज्ञताविष्करणपुरस्सरं चन्दनपुष्पादिभिः सभाजिताः ।

मंगलाचरणेन सन्मानसभासमावेशः समाप्तिः ।

लघुकथा १२

# तस्मादाचार्यवान् भवेत्

## पैत्तंबाडि महाकविः व. रामानुजाचार्यः

पूर्वं भगवद्भक्तः कश्चित अन्धकः कविरासीत। सः सदाऽपि भगवन्तं स्तुवन् अरण्यवासिजनैस्सह वने उवास।

स कदाचित् कुत्रापि गमनसमये मार्गभ्रष्टः कस्मिश्चित अगाधे श्वभ्रे निपत्य कृच्छ्रात किञ्चित्कालानन्तरं ऊर्ध्वमागतः। तदा सः आत्मनः कष्टस्थितिं प्रति चिन्ताकुलः समीपे प्रवर्तमानाः राधायाः भगवतो माधवस्य च उक्तिप्रत्युक्तीः अश्रृणोत। तदा –

माधवः – राधे, तत्र न गच्छ। अन्धेन गृहीता भवेः।

राधा – गृह्णातु नाम।

माधवः – यदि त्वं गृहीता, अहमपि गृहीतः? यदि गृहीतः अनाचार्यवान अकृतप्रपत्तिकः मां मुक्तिं प्रार्थयेत। ततः मुक्तिर्देयैव भवेत्।

राधा – भक्तस्य तस्य मुक्तिः देयैव हि।

माधवः – तथापि "आचार्यदेवो भव" इत्युक्तरीत्या कंचिदाचार्यमुपसंगम्य "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इति मदुक्तशरणागतिकरणानन्तरं सा खलु देया।

राधा – अन्धस्य कथमाचार्योपसंगमनं घटेत? इति।

अन्धः – (श्रुत्वा) यदि मम अक्षिणी दद्येते सद्यः यथानिदेशं आचरामि।

राधामाधवौ–(सद्यः अक्षिणी दत्वा)

"पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत।
आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भव॥"
इत्यनुगृह्य अन्तरधाताम्।

अन्धः – लब्धलोचनोऽपि अलब्धभगवत्सेवः यथाभगवन्निदेशं अनुष्ठितप्रपत्तिः मुक्तिं प्राप।

अतः "तस्मादाचार्यवान भवेत्"





# राजाजी कथा ४०

## सुदर्शनतैलम्



लेखकः — आ० वरदराजः

ज्ञानशेखरस्वामिनां सविधे कश्चिच्छिष्यः गुरुकुल-वास विधया ज्ञानोपदेशं प्राप्य शास्त्राण्यभ्यस्तवान् । स महान् विद्वान् अभूत । स्नानं, सन्ध्यां, जपं तपश्च यथाविधि कुर्वन्नासीत् । गुरुचरणानां सकाशे कतिपयकालं यापयित्वा अन्ततः स गोदावरीतीरं गत्वा आत्मने प्रत्येकमेकमाश्रमं निर्माय जनानां ज्ञानोपदेशं कुर्वन्, तीर्थप्रसादांश्च अनुगृह्णन्नास्त । "ब्रह्मानन्दस्वामी" इति नाम्ना प्रथितश्च आसीत्सः ।

  

एकदा कश्चित्परदेशी सिद्धः समागत्य ब्रह्मानन्दस्वामिनं नमस्कृत्य — "हे महन् ! स्वामिन् !! इदं तैलं देहे लेपने मर्दने चोपयुज्य स्नानं क्रियताम्" इत्युक्त्वा तैलपूर्णं काच-पात्रं (सीसां) तस्य हस्ते न्यक्षिपत् ।

"भोः ! साधो !! इदं तैलं किमर्थं साधु" इति ब्रह्मानन्दस्वामी सिद्धं पप्रच्छ ।

"शरीरमावृत्य रक्षतश्चर्मणः इदमत्यन्तोपयोगकारि । इदमवश्यं भवद्भिः त्रिचतुरान् दिवसान् उपयुज्य शरीर-लेपन-मर्दनपूर्वकं स्नानं कर्तव्यमिति विज्ञप्तिः । अकिञ्चनस्य अस्य दासस्य अभिलाषं सफलयन्तु तत्रभवन्तः" - इत्याह सिद्धः ।

सिद्धस्य अव्याज - प्रेम्णा सन्तुष्टः ब्रह्मानन्दस्वामी तत्तैलं जग्राह । यथासिद्धादेशं च तदुपयुक्तम् ।

  

पञ्चमेऽहनि स्वामिनां आश्रमे समागताः ग्रामीणा जनाः - न जाने - केनाऽपि कारणेन - दण्डवत् प्रणामे चाचरिते; स्वामिनां सन्दर्शनम् आपादतल-मस्तकं विधाय, पराङ्मुखाः परावर्तन्त । न च ते सादरं उपदेशं श्रोतुं वा तीर्थ-प्रसादान् ग्रहीतुं वा तत्र स्थिता । एवमेव परेद्युरपि संवृत्तम् । समेषां जनानां स्वस्मिन् जुगुप्सा समभूदिति स्वामिनोऽज्ञासिषुः ।

  

सिद्धेन दत्तं तैलं मायाप्रभावितं वा मन्त्रेण अभिमन्त्रितं वा यत्किञ्चित् स्यादिति स्वामी मनस्यचिन्तयत् - "स कश्चिदसूया - प्रसवभूः क्षुद्र-मान्त्रिक इव प्रतिभाति । अस्यैव च तैलस्य प्रभावेण मयि बद्धादराणां जनानां शुश्रूषा, भक्तिः प्रपत्तिश्च क्षीण-प्राया; नो चेत कथमयमन्यथा-भावः ? " इति सिद्धं प्रति सिद्धान्तितं च ।

  

जनानां स्वस्मिन् जुगुप्साऽभूदित्येतदवगच्छतः ब्रह्मानन्दस्वामिनः किंकर्तव्य-विमूढता संप्राप्ता । तथाऽपि स्वामी प्राप्तकालज्ञः सरभसं (हुटाहुटि) स्वगुरुचरणानां ज्ञानशेखरस्वामिनां सकाशं प्रायात् । आपद्धर्मानुष्ठाने हि पूर्व-सिद्धान्तितस्यैव प्रवृत्तिर्दृश्यते; तथा च स्वामी सर्वं वृत्तान्तं यथातथं श्रीमते स्वस्वामिने निवेदयामास ।

  

"क्व तत्तैलम् ? सकृत दर्शय तावत् पश्यामि" इत्याहुः ज्ञानशेखर-स्वामिनः । तच्च तैलम् हस्ते गृहीत्वाऽघ्राय, सविमर्शं समीक्ष्य, रहस्यं व्यजनात् । समनन्तरमेवाहुः — "वत्स ! कारणं तावदिदम् । एतत्तैलम् सुदर्शन-मन्त्र-पठन-पुरस्सरं पक्वं निष्पादितम् । एतल्लेपनेन स्नाने कृते चर्म, मांस-पेश्यः, स्नायु-मण्डलं अस्थिपञ्जरं सर्वमन्तर्गतं बहिर्गतमिव द्योतयति । एतद्द्वारा चर्मणः अन्तर्गतं मांसादिकं गोपयितुं शक्तिर्नश्यति । पश्यतां दृष्टिः अन्तःप्रसरण सामर्थ्यं प्राप्नोति । केचिद्योगिनः इदं तैलं शरीरे लेपयित्वा सनियमं सिद्धिं प्राप्तुं एकान्तवासेन साधयन्ति । अस्माकं पुनर्नेदं युक्तमुपयुक्तं वा" इति ।

  

ब्रह्मानन्दस्वामी लज्जितः। गुरोर्विज्ञानं, स्वस्य अज्ञानमस्मिन् विषयेऽवगतम्। किञ्च, सिद्धिप्राप्तौ अपरिपक्ताऽपि प्रकटीकृता।

  

ततस्तस्मिन् गते यथागतं, ज्ञानशेखरस्वामी शिष्यानुद्दिश्यैव मुपादिशत। "यस्य बुद्धिर्न परिपक्वा, तस्य शास्त्राध्ययनेन, स्नानसन्ध्यादिना, जप - तपोनुष्ठानेन वा किं प्रयोजनम्? मनो यावन्न निर्मलं, तावदस्त्येव आपदः शङ्का" इति।

"इदं सुदर्शनतैलं केवलं दौर्भाग्यकरं; नेदं सुदर्शनं; अपि तु दुर्दर्शनमेवानेन सम्भवति। स्यादपि, अन्तस्स्थितस्य मांसास्थिमज्जादिकस्य सर्वस्य जुगुप्साकरस्य सुखेन अनायासेन दर्शनं भवतीति वा "सुदर्शन" मिति सार्थकम् इति केचित् शिष्याः वाद-विवादे प्रवृत्ताः।

"कृतेऽपि वा स्वाध्याये बलवति, मनोनिग्रहस्तु दुष्कर एव। एतत्तैललेपन-स्नानभाग्यं अस्माकं कदा वा भविता" इत्यपरे केचिच्छिष्याः साभिलाषं अभाषन्त।

"एतदेतादृशं मन्त्र-तन्त्र-तैलं मा नाम अस्माकमस्तु; शुद्धम् तैलमेव वरीयोऽस्माकं" इत्यन्ये केचिच्छिष्याः प्राहुः।

स्थाने चैतत —

यद्यत्रायुज्यते यस्य, तस्य तद्विहितं भवेत।<br>अनियतात्मनस्तैलं वृथा सौदर्शनाह्वयम्॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः।<br>मनश्शुद्धिर्यदा हि स्यात तपस्सर्वं समाप्यते॥



# भारतस्य समन्ततो विपदावृतिः

देशे कम्यूनिष्टोपद्रवेण साकं हरिजनगिरिजनांदोलनानि प्रवर्धन्ते । समाजवादिनश्च तमवकाशमुत्पाद्य देशोपद्रवान् बहुलयन्ति । विद्यार्थिनां उद्यमाः, नियोगिनां वेतनादिरभसः, नदीजलभागकलहाः, सीमाविवादाः, परिश्रमस्थापनस्थलवैमनस्यानि, जातीयभाषाविवादः, नवाभिनवविद्याविधानमतिभेदाः, निर्वाचनसंघर्षाः कति वा निर्देष्टुं पारयेम परश्शतं भारतमन्तः क्वथयन्ति कुलालघटतापिनीव । बहिश्च इतोप्यधिकापदः शिरसि विहरन्ति भारतस्य । पाकिस्थानछुरिका, चैनीयगुलिका निरीक्षतः स्वघातयोग्यं स्थानम् । गंडस्योपरि पिटकापि संवृत्ता यद् अस्मन्मित्रत्वेन अभिनयन् रष्यादेशः अस्मच्छत्रवे आयुधानर्पयितुं उद्युक्ते, अपरं मित्रं अमेरिका च पृष्ठद्वारेण पाटानटङ्कानर्पयिष्यति । केरलप्रभृता च केन्द्रीयशासनं तृणाय मत्वा व्यहरति समाजवादिदेशानुकूलं च चेष्टते । नागाश्च पन्नगा इव अनुक्षणं फूत्कुर्वन्ति । उपप्रधानिनः देशायीमहोदयस्य विदेशयात्रा विफलप्रायैव समजनि खण्डांतरात् सहायसम्पादने । रूप्यकमूल्यह्रासकष्टात् भारतं न पारितमेवात्रान्तरे फ्रेंचफ्रांकमूल्यह्राससंरम्भेण वस्तूनां आदानप्रदानार्थसंकटस्समनुभूयते ।

सर्वासामेतासामापदामुपरि वर्तेते विदेशीयानां मतप्रचारवैखरी मतपरिवर्तनम् च । भारतजनतामेव नाशयितुं एकतः प्रजननिरोधकुहना, अन्यतः जातानां वा क्रैस्तवीकरणचटुना च ।

स्पेयिन् देशीयस्य पोपाज्ञावशात भारतदेशे मतांतरीकरणसाधकस्य कुत्सितस्य अत एव महाराष्ट्रात् निष्कासितस्य आन्ध्रेषु आवासं विचिन्वतः पितुः फेर्रस्य कार्यकलापावगाहे अस्मद्दुर्दशा अवगम्येत ।

अयं पिता फेर्रः 1952 वर्षे महाराष्ट्रे मन्माडप्रान्ते प्रविश्य पाठशालानां वैद्यशालानां स्थापनमिषेण बहून् स्वजाले आनयत । अथ च क्षेत्रकारसेवामंडलीं स्थापयित्वा रोमनकाथलिकानां बहूनां वैतनिकानां प्रोत्साहनेन निर्धनान् आशावशांश्च स्वान्तकमानीय ऋणान्यददात् । स्वपतिनिधिभिः मतस्वीकारे ऋणविमोचनं च प्रबोध्य अधमर्णान् हिन्दून् भ्रंशयति स्म । कूपखनने कुटीरनिर्माणे च तेन

नियोज्याः बृहद्भृतयः काथलिखा एव। काथलिखत्वेन परिवृत्तेन जनेन भृतिरधिका लभ्येत। सस्यबीजानां प्रदानमपर उपायः तस्य मतांतरीकरणे। आवासमये बीजानि प्रदीयेरन् तेन। फलितसमये पञ्चगुणं तानि प्रत्यर्पणीयानि। काथलिखत्वेन परिवर्तने एकमपि बीजं न प्रत्यर्पणीयमिति। कृषिनिर्वाहाय प्रदत्ते ऋणे कृषिफले $\frac{1}{8}$ भागः तस्मै समर्पणीयः। कूपखनने भृतिं स ददाति, परन्तु तत्कूपजलसिक्तस्य क्षेत्रस्य आये भागः बहुकालं तस्मै प्रत्यर्पणीयम्। एवं सर्वे नियमाश्च स्वमतप्रविष्टस्य विषये दूरीक्रियेरन्। एवं बहुल आकुलतामापाद्य न्यूनाधिकं 600 ग्रामाः, तत्र न्यूनाधिकं 10000, कुटुम्बाः द्वित्रसहस्रजनाः क्रैस्तवीकृतास्तेन।

नैतावता एतस्य दुश्चेष्टा सीमिता; अपितु स्वानुकूलजनसमवायद्वारा-राजकीयव्यवहारेषु स्थानिकनिर्वाचनेषु एतस्य अदृश्यः क्रूरतरश्च हस्तः प्रासार्यत। तेन सह एतस्य गूढचारितापि अतर्क्यत। एवं पापे परिपक्वे विविधसंघनायकाः प्रभुता च अजागरन्। अन्ततः तं स्वदेशात निर्वासयितुं महाराष्ट्रप्रभुता निरचिनोत्। अथापि एतेन सहकृताः क्रीता वा पत्रिकाः ब्लिट्ज़्, करेंट्, मार्च आफ नेषन्, टैम्स् आफ इंडिया, इंडियन् एक्स् प्रेस् एतदाद्याः तन्निर्वासनं प्रत्यरुन्धन्। यथाकथमपि एषः निष्कासितः।

तथापि स एष पुनः आन्ध्रेषु तिष्ठासति इति शोचनीया वार्ता। जड्. पि. हिसोजा ग्रन्थानुसारं जेसूट संस्थीयाः भारतदेशम् मण्डलशः विभज्य मतांतरीकरण-प्रयत्ने स्वरक्षक्षेत्रत्वेन अभावयन्। तत्र महाराष्ट्रगूर्जरांध्राः स्पेयिनदेशभागत्वेन निर्णीताः।

तदनुगुणं अयमत्र महाराष्ट्रे स्वकार्यं यावच्छक्यं संसाध्य गुजरातेन तिरस्कृतः आन्ध्रप्रदेशं पीडयितुम् वांछति। आंध्रेषु च राजकीयप्रजानैतिकसहायः स्वेन अधिकांशेन लभ्येतेति आशंसते।

अतः जागरूकैः आन्ध्रैः वर्तितव्यम्। गुजरातसूचितमार्ग एव माननीयः।

" प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् "

——:o:——

# दरिद्रः किं करिष्यति

## लेखकः के. सूर्यनारायणः

दरिद्रा-दुर्गतौ इत्यस्माद्धातोः दारिद्र्यमित्ययं शब्दः उत्पन्नः। यस्तु दुर्गतिमनुभवति सः दरिद्रः इत्युच्यते । जन्मान्तरकृतपापपुण्यफलमनुसृत्यैव सर्वोऽपि जीवलोकः दुर्गतिसुगत्यनुभवभाक् भवति । पूर्वजन्मनि कृतपुण्यः जन्मन्यस्मिन् सुगतिमनुभवति। गतजन्मपापकारी तु दुर्गतिमनुभवतीति बहुशः अङ्गीकृतोऽयं विषयः। सुगतः प्रायशः धनी भवेत्। सः यद्यदिच्छति तत्सर्वं लब्धुं शक्नोति, लोकस्य धनमूलकत्वात्। आदावज्ञोऽपि धनवतामेव विद्यार्जनसौविध्यसत्त्वात् विद्यार्जनेन सर्वज्ञो भवेत्। एवमभीष्टानि सर्वपदार्थानि भोक्तुं शक्नोति। अमूल्यवस्त्राणि च धर्तुं शक्नोति। एवमभीप्सितचित्रादिकं द्रक्ष्यति। यस्तु धनवान् भवति सर्वान् स्वस्य लोपान् सः परिहर्तुं शक्नोति। सः सर्वदा सर्वथा च सम्पूर्णः भवेत्।

परन्तु दरिद्रः किं करिष्यति। सः यद्यत्कर्तुमिच्छति तदेकमपि साधयितुं न शक्नोति। अल्पस्य कर्मणः साधनेच्छायां सत्यामपि तत्र धनस्यावाश्यकत्वात् न तदपि साधयति। अस्मिन् भारतदेशे गणनार्हाः धनिनः प्रतिशतं दशसंख्याकाः एव सन्ति! शिष्टा नवतिसंख्याकाः महामेधाविनः। परन्तु किं करिष्यन्ति। तेषां दरिद्रत्वात् उदरपोषणार्थमेव तदीयस्य कालस्य विनियोगो भवति। तथा कर्मकरणेनापि अनुरूपम् फलम् तैः न लभ्यते। तेषां नित्यावश्यकाः सामान्यपदार्थाः अपि दुर्लभाः भवन्ति। यदि कुत्रापि दृष्टाः मूल्याधिक्यात् अकिंचनानामलभ्याः भवन्ति। सर्वत्र धनवन्तः एव उद्यन्ति। अतः निर्धनाः सर्वे जीवनं नेच्छन्ति। "अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षाः न भवन्ति खलु सर्वप्राणिनां प्रवृत्तयः" इति यदुच्यते तदद्य भारतदेशे न सङ्गच्छते। निर्धनः दारिद्र्यमनुभवितुमशक्तः कदाचिद्वैराग्योन्मादी च भवति। सः मतहीनो भवत्यन्ते। तदेवोक्तं शूद्रकेणापि— "सर्वं शून्यं दरिद्रस्य" इति। दरिद्रः जीवच्छवो भवति। मारणदरिद्र्योः मरणमेवातिरिच्यते। मरणन्तु तत्समयमात्रदुःखप्रदं भवति। अतः दरिद्राः मरणमेवेच्छन्ति। मधुपानां चंपकत्यागवत् दरिद्राणामतिथिमित्रत्यागो भवति। मित्राणि न केवलं त्यजन्ति। किन्तु शत्रवोऽपि भवन्ति। सेवकाः विरक्ता भवन्ति। दरिद्रस्य आशापि अल्पनरस्य क्रोध इव उपशाम्यति। धनहीनः पुरुषः नारीसमो भवति। सर्वलोपेषु धनलोप एव लोप इत्युच्यते। परकृतस्तेयादिदोषाः अपि दरिद्रे

आपतन्ति। तेन तदीयं शुद्धचरितमपि विदूष्यते। शरीरपरिक्षत्यपेक्षया गणनीयस्य चरित्रस्य परिक्षतिः यदि भवेत् तदा कथं सः दरिद्रः भवेत् ?

दारिद्र्यात् पुरुषः ह्रियमेति। तेजसः प्रभ्रश्यते। निस्तेजाः परिभूयते। परिभवान्निर्वेदमापद्यते। निर्वेदात् शुचमेति। शोकात् बुद्धिनाशो भवति। बुद्धिनाशात् क्रमशः प्रणश्यति। पातकेष्वपि दारिद्र्यस्य षष्ठत्वमुक्तम्। दरिद्रस्य चपलायाः लक्ष्म्याः स्पर्शाभावात् सोऽप्यचपलो भवेत्। शमदमतितिक्षासद्भावसदाशयादिसद्गुणा निर्धनपुरुषे धनवत्पुरुषापेक्षया अधिकस्थानमारोहन्ति। परन्तु सुबुद्धेरपि तस्य वचनं कोऽपि न शृणोति। महाधनिनः अज्ञानोक्तवचनमपि सर्वेकारः सम्मानयति। एतेन सुपरिपालनाभावात् ऐकमत्यराहित्याच्च सर्वाभिवृद्धिविनाशो भवति।

यावत्प्रपञ्चमपि एकाधिकारात् परिपालयितुं समर्थाः ज्ञानिनः भारतदेशे बहवः सन्ति। तेषु केचित् निरक्षरास्याः केचित् अक्षरास्या अपि कार्मिकवर्गीयाः निर्धनिनः। कः मद्वचनं श्रोष्यतीति एते सर्वे तूष्णीमासते। अतः आहारादिसमस्यानां निराकरणाय दीनजनोद्धरणं कर्तव्यं भवति। निर्धनिनां दीनानां यदा सर्वकारेण उन्नतिः सम्पादिता भवेत् तदा ते परिपालनरङ्गे स्थानं लब्ध्वा देशजनतत्वज्ञत्वात् वस्तुजातस्य उत्पत्तिमभिवर्ध्य वर्धमानं सम्यग्विनियोज्य स्वार्थपरान् विनाशयन्तः अत्यल्पे एव काले देशं सर्वथा समभिवर्धयेयुः। निर्धनाः तथैव यदि स्युः किमपि न करिष्यन्ति। निर्धनधनवद्भेदं परिहृत्य समता सम्पादनीया। समतायां सत्यां देशे सर्वेऽपि स्वस्वज्ञानं विनियोज्य आत्मदेशं सम्पन्नं कृत्वा अग्रदेशत्वेन परिणमयेयुः॥

सर्वेत्र सुखिनस्सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाक् भवेत्॥

श्रीः

# ज्योतिस्संश्लेष विद्यापीठम्

नडवलूरु (तिरुपतिसमीपम्)

श्रीमदलमेलूमंगांबासमेतानां श्रीमतां तिरुवेङ्कडार्यवर्याणां, चित्पुर संस्कृतभाषा-प्रचारिण्याः सभायाः प्रधानमन्त्रिमहोदयानां षष्ट्यब्दपूर्तिमहोत्सवावसरे सादरं समेमगौरवं-ज्योतिस्संश्लेषविद्यापीठेन समर्पितं

## मङ्गलाशासनम्

षष्ट्यब्दपूर्त्युत्सवसंप्रदायः
प्राचीन एवाऽत्र महीविभागे।
प्राप्तप्रभावः प्रभवादिना वै
अक्षय्यभावं किल प्राप्नुते च ॥

जितं जितं तेन महोदयेन,
विद्याप्रवीणेन महामहेन,
भाषाप्रवीणेन च पण्डितेन,
श्रीवेङ्कटार्येण सतीयुतेन ॥

यत्कीलकं कीलकमस्य भूम्नः,
तत्कीलकं कीलकमस्य धाम्नः,
जीयात्क्षमेयं महता विभूम्ना,
श्रीवेङ्कटार्येण सतीयुतेन ॥

सभापतिं प्राप्य विराजतां सभा
समेधतां संस्कृत-संस्कृतिप्रभा।
सतीयुतेनाप्तसमस्तसम्पदा,
श्रीवेङ्कटार्येण विभूयतां मुदा ॥

द्वन्द्वात्मकेऽस्मिन्नखिलप्रपंचे
निर्द्वन्द्वमेतद्द्वयसंविधानम् ।
श्रीमद्द्वयं जिष्णु भविष्णु नित्यम्
पद्मोद्भवोपेतपुरुस्वरूपम् ॥

श्रीमदलमेलूमंगाम्बासमेत (पद्मोद्भवोपेत) श्री तिरुमल कण्डूरु तिरुवेङ्कटाचार्यवर्यः (पुरुस्वरूपं) जयतु शरदश्शतम्, जयतु शरदां शतम् ।

श्रीमतोरनयोर्दम्पत्योः नित्यश्रीर्नित्यमंगळं भूयादिति भगवत्प्रार्थनापुरस्सरमाशास्महे ।

इत्थं गौरवाध्यक्षः,
श्रीमान् कुज्जमूरु गोपालाचार्यस्वामिनः,
कार्याध्यक्षः,
श्री ए. वरदराजः.

चित्पुरम्,
25-10-68.

# श्रीरामक्रतुमहोत्सवः

## (अष्टोत्तरशततमः)

तिरुमलैक्षेत्रे बालाजी (श्रीवेंकटेश्वर) सन्निधाने नवंबर - प्रथमदिनादारभ्य एकादशदिनपर्यन्तं महावैभवेन निरवाह्यत । श्रीमन्नारायणरामानुजजीयरमहाभागाः क्रतुमिमं नवेभ्यः वर्षेभ्यः समारभ्य भारतदेशे आसेतुशीतनगं तत्र तत्र क्रतुस्तम्भनिखननपूर्वकं सप्तोत्तरशतक्रतून् समाप्य व्रतपूर्वकं इमं अष्टोत्तरशततमं तं तिरुमलैक्षेत्रे आचरन् ।

यागशाला तिरुमलैक्षेत्रे वराहस्वामिदेवालयपश्चाद्भागे सन्निवेशिता । 108 अग्निकुण्डेषु अष्टाक्षरीश्रीरामगायत्री-रामहनूमन्मंत्रादिभि मूलरामायणस्यानुसन्धानपूर्वकं च 108कोटि होमोनिर्वर्तितः । 108 याजकैः स्तम्भे स्थाप्यस्य श्रीरामपट्टाभिषेकशिलामूर्तेः 108 × 5 कलशैः अभिषेको निर्व्यूढः । अन्ततः 11 तिथौ सा पट्टाभिषेकमूर्तिः सवाद्यघोषं साष्टोत्तरशतच्छत्रं च उत्सवेनानीय तत्पूर्वनिर्मितस्य महास्तम्भस्य तिरुमलै देवस्थानधर्मशालासमीपस्थस्य पुरोभागे स्थापिता । तया सहैवानीता रामकोटिः 108 कोटियुता स्तम्भान्तः स्थापिता । तद्दर्शनार्थं मन्ये उपलक्षं जनाः तत्र गिरौ समभिलन् ।

क्रतुदिनेषु एकादशस्वपि 108 कुण्डेषु सुयोग्यैः याजकैः पांचरात्रवैखानसागमविधानेन होमः अक्रियत। 108 ऋग्यजुस्सामघनपाठिभिः वेदो अपठ्यत, 108 श्रीवैष्णवैः द्राविडवेदः अनुसंहितः, 108 ब्राह्मणोत्तमैः द्वादशसु पुराणेषु विद्यमानं श्रीवेङ्कटेश्वरमाहात्म्यं अन्वसन्धीयत, 108 वटुभिः श्रीविष्णुसहस्रनामस्तोत्रस्य पारायणम् व्यधीयत च। हरिकथाः, भजनानि, पुराणानि, उपन्यासाः, नाटकानि, गानसभाः, इत्येवमादीनि बहूनि समनुभूयन्त। महिलानां कृते पृथक् कार्यक्रमोपि उपन्यासादिषु अवर्तत। क्रतुदर्शनार्थं समागतानां भोजनभाजनशयनकृते च महान् प्रबन्धः संविहितः। श्रीवैष्णवेभ्यः श्री वैष्णवस्वामिमठेषु सर्वत्र, स्मार्तेभ्यः मध्वीयेभ्यश्च मैसूरधर्मशालायां, वैश्यानां कृते आर्लिडियावैश्यधर्मशालायां, शूद्रेभ्यः तत्तदुचितधर्मशालासु, केवलं स्त्रीभ्यः वेदपाठशालायां, किं बहुना मठिकां कुटिकां च अनपहाय सर्वत्र सौकर्यमाचरितम्। बहूनि च कुट्य (काटेजस्) स्वामिना स्वायत्तीकृताः आगन्तुकेभ्यः प्रादीयन्त। तथापि न शयितुं नोपवेष्टुं न स्थातुं च स्थलमलभ्यत जनैः। न दिवा न रात्रिश्च विविक्ततया अज्ञायि भक्तैः। मन्ये श्रीवेङ्कटेश्वरदेवस्यापि नासीन्निद्रा यतः रात्रौ तृतीयघंटापर्यन्तं तदुपरि वा धर्मदर्शने श्रेणीनिष्ठानां भक्तानां दर्शनप्रदानाय जागरणं, तदनन्तरमेकघंटापर्यन्तं एकान्तसेवा कुतूहलं, कपाटघटनानुपदमेव च भक्तानां सुप्रभातघोषश्रवणं च अन्वभूयत।

अपि चेदं शेषशैलाधिपतेः आनन्दावहं अवश्यं अभवदेव यद् स प्रतिदिनं दशाधिकेषु उपविशति कल्याणेषु वरस्समभवत। हनुमद्गरुडादिवाहनारोहवैभवं अर्चनाविशेषाश्च तस्य सामान्यमेवासीत्। प्रतिदिनं च रात्रौ 108 छत्रैस्सह पुरतः महता द्रविडप्रबन्धघोषेण पश्चाच्च वेदघोषेण, उभयतः भागवतभक्तगोष्ठ्या च समलंकृतः शेषशैलाधिवासः मृदुहसन् मन्दं मन्दं पुरः प्रसन् स्वभक्तहृदयानि आवर्जयन् स्वालयं प्रदक्षिणी करोति स्म।

वदन्ति जनाः ब्रह्मोत्सवादपि अधिकं धनमासादितं भगवता एतत्क्रतुसंदर्भेणेति। मन्ये लक्ष्मीः प्रथमं कोपात् इमं परित्यज्य गतापि बहुकालवियोगमसहमाना विरहोत्कंठिता सा इमं अनुदिनमसेवतेति।

एवं निष्पन्नः श्रीरामक्रतुः "न भूतो न भविष्यति" रामभार्गं अतिशायिष्यति, श्रीमन्नारायणरामानुजजीयरपादानां कीर्तिं वर्धयिष्यति च।

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

## कीलकवत्सर - उत्तरायणपरीक्षाणां कार्यक्रमः

### SCHEME FOR MARCH EXAMINATIONS 1969

| आवेदनपत्राणां विना-विलम्बशुल्क प्रेषणाय अन्तिमा तिथिः | विलम्बशुल्केन सह आवेदनपत्रप्रेषणाय अन्तिमा तिथिः | परीक्षा तिथयः |
|---|---|---|
| 20--1--69 | 31--1--69 | 8, 9, 10 मार्च 1969 |

| | | |
|---|---|---|
| परिचयपरीक्षायाः शुल्कम् रु | | 1-50 |
| अभिज्ञपरीक्षायाः | ” | 3-00 |
| विचक्षणपरीक्षायाः | ” | 4-00 |
| समर्थपरीक्षायाः | ” | |
| (खण्डद्वयस्य) | ” | 6-00 |
| प्रतिखण्डम् | | 3-00 |
| कोविदपरीक्षायाः | | |
| पञ्चखण्डात्मिकायाः | | 10-00 |
| प्रतिखण्डम् | | 3-00 |
| (विलम्बशुल्कम्) | | 0-50 |

★ कोविदपरीक्षा आंध्रसर्वकारेण अनुमोदिता ।

परिचयाभिज्ञविचक्षणपाठ्यपुस्तकानि समर्थकोविदपरीक्षयोश्च कतिचन पाठ्य-पुस्तकानि च एतत्सभायां लभ्येरन् ।

सं. भा. प्र. सभा, चित्तूरु,
15—12—1968.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

—:o:—

# विश्वश्रेयस्साधनमेव हिन्दूमतस्य लक्ष्यम्

## (श्रीकामकोटिपीठस्वामिनां अभिभाषणम्)

हिन्दूधर्ममाधारीकृत्य हिन्दूसमाजं सुसंघटितं विधाय चैतन्यसमुत्तेजनं विश्वस्यैव कल्याणाय संपद्येत । अस्मदीयप्रादुर्भावस्य प्रगतेश्च कारणभूतस्य भगवतः स्वरूपमेव धर्मत्वेन अनुभूयते । तादृशस्य धर्मस्य बाह्यं रूपमेव वेदाश्शास्त्राणि च । युक्तायुक्तविवेकमूलं आदिकालादद्यतनकालपर्यन्तं अवतीर्णानां महापुरुषानां प्रबोधानामाधारभूतः अस्मदीयो धर्मः । धर्मोद्धरणाय अस्माभिः प्रसिद्धिमनाकांक्षमाणः त्यागः अंगीकर्तव्यः ।

वृक्षमूलसेचनेन यथा सर्वस्य वृक्षस्य सजीवत्वं तथा वेदशास्त्रपुराणादीनां संरक्षणे एव हि हिन्दूधर्मस्य स्थैर्यं वर्धेत । अतः सर्वैः वेदशास्त्रसंरक्षणाय त्यागो विधेयः, हिन्दूधर्मोद्धरणकृते सर्वस्वमर्पणीयम् ।

पूर्वेषां त्यागफलमेव प्रतिरदं दृश्यमाना देवालयाः धर्मसंस्थाश्च । परन्तु ते अद्य दिने दिने क्षीणक्षीणा वर्तन्ते । अल्पकाले एव ते सर्वे शिथिलीभवेयुरिति प्रतिभाति । अन्यमतीयास्तु स्वदेवालयान् नवनवान् निर्मान्ति, वयं तु स्थितानुपेक्षामहे इति कियद्दौर्भाग्यम् ?

एवं स्थिते अस्मद्धर्मसंरक्षणाय हिन्दूनां एककुटुम्बत्वभावना आवश्यकी । सर्वैः रामायणपारायणं कर्तव्यम् । रामायणं च महापुरुषस्य पुरुषोत्तमस्या पवित्रगाथात्मकं, शाश्वतकैवल्यसाधनम् ।

ये चाद्य अन्यमतीयाः प्रथन्ते ते सर्वेपि पूर्वं हिन्दव एव । अत्रत्या अन्यमतीया अन्यतो नैवागताः, अपितु अस्मदीया एव । अपितु अज्ञानात् प्रलोभनात् भयात् वा अन्यमतं प्रविष्टाः । तत्सर्वे सर्वे पुनः स्वीयपूर्वधर्मं अवलम्बेरन् । वयं तु अस्मदीयानि धर्मशास्त्राणि तान् बोधयेम । श्रीरामं यदि वयं मनसा ध्यात्वा कर्म कुर्याम सर्वेपि अस्माभिः आकृष्टा भवेयुः । भगवत्प्रेम्णः रसं अनुभूतवन्तः न कदापि स्वीयधर्ममुज्झित्य विदेशीयधर्मं परिगृह्णीयुः । गृहीतवन्तोपि

वा स्वधर्मं प्रति प्रतिनिवर्तेरन् । अतः एकैकः हिन्दुः तदर्थं कंचित्कालं भगवन्त ध्यायेत् ।

एकैकः भारतीयः हिन्दूत्वेन जीवेत । तथा यदि तिष्ठेम वयं तदा अहिन्द्वोपि हिन्दवस्संपद्येरन् । वयं रामं शरणम् गच्छेम, रामदूतस्य चरितम् भावयेम । तदैव प्रपञ्चस्य सर्वस्यापि हिन्दूत्वापादने शक्तिः अस्मान् अविशेत् । हनूमद्भक्त्या बुद्धिर्यशोबलं धैर्यं निर्भयत्वमरोगिता अनालस्यम् वाक्छुद्धिः ब्रह्मचर्यं इत्यादयः सद्गुणाः अस्मासु भूवेयुः ।

हिन्दूमतोन्नतादर्शानुगुणं अस्मत्प्रवर्तने साधिते सति अन्यमतादर्शाः आतपे करदीपिका इव कांतिहीना भवेयुः । एतद्विषये राष्ट्रीयस्वयंसेवकसंघस्य सेवां अतितरां प्रशंसामः । आत्मजात्यैव अनादरे प्राप्ते, कष्टपरंपरासु अभिमुखीषु च स्वयं धर्मसेवामविरतं कुर्वन्ति ते । अतः सर्वेपि एवं स्वयंसेवका भवेयुः । एवं करणे तव हिन्दूधर्मस्संरक्षितो भविष्यति ।

अस्मन्मतस्य अतिप्राचीनस्य प्राक् नामैव नाभवत् । प्रायः द्विसहस्रवत्सरेभ्यः पूर्वं प्रपञ्चे एव किमपि अन्यत् मतं नासीत । अस्मन्मतमेव तदा सम्मतमासीत । अतः एतस्य तदा नामापि नासीत् । यदा एकाधिकानां सत्वं तदा तेषां परस्परभेदज्ञानार्थं व्यवहारसौकर्याय च नामनिर्देश आवश्यकः । यथा एकस्मिन् ग्रामे सत्यनारायणनामानः द्वित्रा यदि भवेयुस्तदा तेषां भेदज्ञानार्थं वि. सत्यनारायणोयं के. सत्यनारायणस्स इत्यादि विधया भेदनिर्देश आवश्यको भवति । तदा एकैकस्य अस्य ममत्वेनैव व्यवहारः न हिन्दूमतत्वेन । एतच्च नाम अन्यमतप्रादुर्भावानन्तरं आपतितमेव ।

हिन्दूधर्मः मानवधर्म एव । अस्मन्मतसीमानः सर्वप्रपञ्चव्याप्ताः वर्तन्ते । तथापि हिन्दूधर्मो बहुभिः दोषैरापतितैः बलहीनो भवति सत्यम् । एतमन्तरमालम्ब्य तुच्छा इतरधर्मा अज्ञान् दरिद्रान् लुब्धान् अलसांश्च आक्रामन्ति । अस्मत्पापादेव इयमापदापतिता । अस्मदाचारलोप एव एतस्य कारणम् ; ततः अन्यधर्मविमर्शनात आत्मपरिशीलनं आवश्यकम् ।

अस्मात्पापादेव देशविभजनमासीत। स्वधर्मविस्मरणमेव महापातकम्। तत्परिहारार्थं भगवन्नामस्मरणमाचरितव्यम्। प्रातः रामनाम, सायं शिवनाम, सर्वकालेषु वा हरिनाम स्मरेम। घटिकायन्त्रस्य कुण्डलतन्त्रीव नामसंकीर्तनम् अस्मासु दिव्यां शक्तिमुत्पादयेत।

सिक्कमतमपि हिन्दूमतैकदेश एव। तेषां गुरुरपि रामायणं आदृतवान्। राजकीयकारणात् ते किंचिद्भिन्नाः व्यवहरन्ति।

हिन्दूमतस्य प्रतीकं शिवाजी भवति। समर्थरामदासस्वामिना आदिष्टेन राममन्त्रेण स तादृशो वीरस्समजनि। शात्रवेषु हैन्दवान् स्त्रियः पुरुषांश्च नानाविधैः भञ्जयत्स्वपि स धर्मशीलः स्वबन्दीभूताः स्त्रियः मातृत्वेन संभाव्य तत्तद्गृहान् प्रापयत्। धर्मो रक्षति रक्षितः।

प्रपञ्चे खण्डखण्डान्तरेषु बहवः हिन्दवो वर्तन्ते। तेषां योगक्षेमौ ज्ञात्वा स्वधर्माविस्मरणार्थं च यावच्छक्ति अस्माभिः प्रोत्साहो देयः।

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः। अतः जागरूकैः रामध्यानपरैरात्मधर्मसंरक्षणबद्धदीक्षैः हिन्दुभिः आत्मक्षेमाय विश्वक्षेमायैव वा प्रयतनीयम्।

——:o:——

कीलक कार्तिकिकशुक्लचतुर्थ्यां भृगुवासरे

25—10—68 तिथौ

## षष्ट्यब्दपूर्तिमहोत्सवे



सपत्नीकः सस्नुषापुत्रकः

श्रीमान् ति. कं. तिरुवेङ्कटाचार्यः

प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskritha Basha Pracharini Sabha, Chittoor.

## Income & Expenditure Statement for the year Ending 31st March 1967.

### EXPENDITURE.

| | |
|---|---|
| To Opening stock of Books. | 13621-79 |
| ,, Cost of Paper & Printing Charges for Publication of Books | 1464-56 |
| ,, ,, Purchase of Books | 267-04 |
| ,, ,, Job Printing & question Papers | 446-20 |
| ,, ,, Subscription for daily News papers and Magazines | 127-95 |
| ,, Bank & Moneyorder Commission with Telegrams | 11-95 |
| ,, Security fees paid for Text Book Committle for Sanskrit Reader ii | 50-00 |
| ,, Salary for Maintaining Free School | 131-25 |
| ,, Salary for Libererian and Building Maintaining Expences | 356-16 |
| ,, Convayence Charges with Travaling & Bearing Charges | 124-62 |
| ,, Stationary & General Charges | 169-22 |

### COST OF GAIRWANI MAGZINE.

| | | |
|---|---|---|
| To Salary to Editor M. Varadarajam Panthulu | 1800-00 | |
| ,, ,, Sub Editor K.V. Raghavan | 1440-00 | |
| ,, ,, Clerk. E. Sundara Rajam achari | 360-00 | |
| ,, ,, Peon Krishnaiah Naidu | 360-00 | |
| ,, Postage for sending copies of Gairwani | 119-60 | |
| ,, Cost of Printing Charges | 1200-00 | |
| ,, ,, Papers Purchased for Magzine | 855-97 | |
| ,, Cost of Blocks Purchased for Magazine | 25-00 | |
| ,, Audit fees Paid for Auditing Gairwani A/c | 25-00 | 6185-57 |

## EXPENDITURE.

**REMUNERATION PAID TO PRACHARAKS.**

| | | |
|---|---|---|
| ,, Sri N. Subraya Sastri | 900-00 | |
| ,, Sri T. K. Tiruvengadachary ulu | 900-00 | 1800-00 |
| Remuneration paid to Superintendents | 314-13 | |
| ,, ,, Examiners | 405-29 | |
| ,, ,, Pandits | 86-71 | 806-13 |
| To Postage | | 784-70 |
| ,, Excess of ncome over Expenditure | | 2075-69 |
| | | 28422-83 |

## INCOME

| | |
|---|---|
| By Sale of Books | 3481-19 |
| ,, Subscription from Members | 13-00 |
| ,, Subscription from Gairwani | 450-60 |
| ,, Examination fees | 2648-52 |
| ,, Interest Receipts | 45-48 |
| ,, Donations | 8723-97 |
| ,, Grant for maintaing the liberary for the year 1966-67 | 200-00 |
| ,, Grant from Chittoor Muuicipality through Special Officer | 500-00 |
| ,, Goverment Charges for Publishing the Matter of Andhra Pradesh Magzine in Gairwani | 200-00 |
| ,, Suspence Acccount | 78-32 |
| ,, Closing stock of Books | 12081-75 |
| | 28422-83 |

# Balance Sheet as on 31st March 1967.

## LIABILITIES

| | | |
|---|---|---|
| Sundry Creditors | | 2429-59 |
| CAPITAL ACCOUNT. | | |
| Balance Brought forward | 58254-01 | |
| ADD. | | |
| Excess of Incomeover Expenditure in the year | 2075-69 | 60329-70 |
| Difference in Books | | 61-15 |
| | | 62820-44 |

## ASSETS

| | | |
|---|---|---|
| By Cash on hand | | 268-14 |
| BY CASH AT BANK, | | |
| The Co-operative Town Bank Ltd. | | |
| In. S. D. 3079 | 1536-98 | |
| ,, S D. 3386 | 81-41 | |
| ,, U. D. 1938 | 814-25 | |
| ,, C. D. 2941 ( Building fund ) | 301-92 | 2734-56 |
| FIXED DEPOSITS. | | |
| The Co-operative Town Bank Ltd. | 6232-00 | |
| The Andhra Bank Ltd., | 1000-00 | 7232-00 |
| Cost of Building including Repairs & Construction Expences | | 30520-83 |
| Cost of furniture | | 1175-07 |
| Stock of Liberary Books | | 7781-70 |
| Closing Stock of Books | | 12081-75 |
| Sundry Debtors | | 1026-39 |
| | | 62820-44 |

## L.P No. Sundry Debtors as on 31—3—1967.

| | | |
|---|---|---|
| 12. | Madallapalli Munisubramanyam Chetty | 152-07 |
| 15. | Andhra Pradesh State.Electricity Board | 10-00 |
| 16. | Narayana Moorthy Allegadda | 14-50 |
| 19. | G. Ramanujacharyulu | 112-23 |
| 20. | K. Srinivasacharya | 98-66 |
| 20. | M. V. Srinivasa Raghavacharya | 124-42 |
| 21. | K. R. Vaidyanatha Sastri | 12-42 |
| 22. | K. S. Raghavacharya | 105-95 |
| 32. | M. R. Kuppusami Deershitar | 124-36 |
| 34. | C. V. Seshacharyulu | 149-25 |
| 48. | T. S. Sundaram | 4-80 |
| 50. | T. K Ramachandra Sastri | 0-55 |
| 52. | S. Ranganadha Sarma | 31-20 |
| 59. | Gairwani Income & Expenditure Account | 37-73 |
| | V. P. Dues. | 48-25 |
| | | 1026-39 |

## Sundry Creditors as on 31—3—1967.

| | | |
|---|---|---|
| 13. | K. V. Raghavacharyulu | 2000-00 |
| 28. | Vijaya Press | 300-14 |
| 34. | Samskritha Basha Pracharini Sabha Branch Masulipatam | 129-45 |
| | | 2429-59 |

## AUDIT REPORT

We have gone throug the accounts maintained by the Samskritha Basha Pracharini Sabha, Chittoor Income & Expenditure Statement and Balance Sheet are prepared in accordence with the Books maintainted by Sabha and found correct.

For Associated Auditors,
K. HARI KRISHNAN.
Partner.

Chittoor,
Dated 7-11-68.

# Samskritha Basha Pracharini Sabha, Chittoor.

## Income & Expenditure Account for the year Ending 31st March 1968.

### Expenditure.

| | | |
|---|---|---|
| To opening stock of Books | | 12081-75 |
| ,, Cost of Paper & Printing Charges for Publication | | 840-66 |
| ,, ,, Purchase of Books | | 269-39 |
| ,, ,, Job Printing & question Papers | | 397-25 |
| ,, ,, Subscription for daily News papers and cost of liberary Books Purchased | | 3177-07 |
| ,, Bank & Moneyorder Commission & Telegrams | | 16-14 |
| ,, Salary for Libererian and Building Maintainence | | 436-76 |
| ,, Convayence Charges | | 67-85 |
| ,, Stationary & General Charges | | 51-41 |
| ,, Cost of furniture Purchased for Liberary | | 300-00 |
| **Cost of Gairwani Magzine.** | | |
| To Salary to Editor M. Varadarajam Pantbulu | 1800-00 | |
| ,, ,, Sub Editor K.V. Raghavan | 1440-00 | |
| ,, ,, Clerk. E. Sundara Rajam achari | 360-00 | |
| ,, ,, Peuon Krishnaiah Naidu | 360-00 | |
| ,, Cost of Paper Purchased for Magzine | 939-64 | |
| ,, ,, Printing Charges | 1120-00 | |
| ,, Postages for sending copies of Gairwani | 102-83 | |
| ,, Cost of Blocks | 61-50 | |
| ,, Audit fees Paid for Auditing Gairwani A/c. | 25-00 | 6208-97 |
| ,, Remuneration paid to Examiners | 313-53 | |
| ,, Remuneration paid to Superintendents | 357-77 | 671-30 |
| ,, Postage | | 696-38 |
| ,, Excess of Income over Expenditure | | 1595-84 |
| | | 26810-77 |

## Income

| | |
|---|---|
| By Sale of Books | 3125-11 |
| ,, Subscription from Members | 20-10 |
| ,, Subscription from Gairwani | 424-10 |
| ,, Examination fees | 2594-33 |
| ,, Interest Receipts | 95-56 |
| ,, Donations | 4671-50 |
| ,, Goverment Grant for Gairwani Magzine | 2000-00 |
| ,, ,, ,, for Maintaining liberary | 2000-00 |
| ,, ,, ,, for Maintaining liberary through Central Liberary | 300-00 |
| ,, Suspence Accoount | 32-67 |
| ,, Closing stock of Books | 11547-40 |
| | 26810-77 |

# Balance Sheet as on 31st March 1968.

## LIABILITIES

| | | |
|---|---|---|
| Sundry Creditors | | 2610-14 |
| CAPITAL ACCOUNT. | | |
| Balance Brought forword | 60329-70 | |
| ADD. | | |
| Excess of Incomeover Expenditure | 1595-84 | 61925-54 |
| Difference in Books | | 21-80 |
| | | 64557-48 |

## ASSETS

| | | |
|---|---|---|
| Cash on hand | | 741-20 |
| CASH AT BANK, | | |
| The Co-operative Town Bank Ltd. | | |
| In. S. D. 3079 | 1519-33 | |
| ,, S. D. 3386 | 85-05 | |
| ,, C. D. 1938 | 817-73 | |
| ,, C. D. 2941 ( Building fund ) | 3[illegible]2-[illegible]7 | 2734-28 |
| FIXED DEPOSITS. | | |
| The Co operative Town Bank Ltd. | 8232-00 | |
| The Andhra Bank Ltd., | 1000-00 | 9232-00 |
| Cost of Building including Repairs & Construction Expences | | 30520-83 |
| Cost of furniture | | 1175-07 |
| Stock of Liberary Books | | 7781-70 |
| Sundry Debtors | | 835-00 |
| Closing Stock of Books | | 11547-40 |
| | | 61557-48 |

## L.P No. Sundry Debtors as on 31—3—1968.

| | | |
|---|---|---|
| 12. | Madallapalli Munisubramanyam Chetty (Building Account) | 152-07 |
| 15. | Andhra Pradesh State Electricity Board | 10-00 |
| 20. | K. Srinivasacharya | 98-66 |
| 20. | M. V. Srinivasa Raghavacharya | 124-42 |
| 21. | A. Subramanya Sastri, M. A | 3-50 |
| 21. | K. R. Vaidyanatha Sastri | 12-42 |
| 22. | K. S. Raghavacharya | 105-95 |
| 22. | M. R. Kuppusami Deershitar | 111-26 |
| 34. | C. V. Seshacharyulu | 149-25 |
| 38. | T. Mahadeva Sastri | 3-29 |
| 48. | T. S. Sundaram | 4-80 |
| 52. | S. Ranganadha Sarma | 17-65 |
| 66. | Sagara Praduymnacharyulu | 2-50 |
| 67. | Balaji Publishers | 14-00 |
| 68. | Gairwani Income & Expenditure Account | 2-73 |
| 70. | Narayana Moorthy | 14-90 |
| | | 827-40 |
| | V. P. Dues. | 7-60 |
| | | 835-00 |

## Sundry Creditors as on 31—3—1968.

| | | |
|---|---|---|
| 13. | K. V. Raghavacharyulu | 2000-00 |
| 30. | Vijaya Press | 610-14 |
| | | 2610-14 |

## AUDIT REPORT

We have gone throug the accounts maintained by the Samskritha Basha Pracharini Sabha, Chittoor Income & Expenditure Statement and Balance Sheet are prepaqed in accordence with the Books maintainted by Sabha and found correct.

For Associated Auditors,
K. HARI KRISHNAN
Partner.

Chittoor,
Dated 4-11-68.

# कीलकवत्सर दक्षिणायन परीक्षा फलितांशाः

## संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

## Samskrita Bhasha Pracharini Sabha, Chittoor

The following are the Register numbers of the candidates who got succesful in the Examinations held on 7th, 8th and 9th September 1968.

### परिचयः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| I Class | 1 | 12 | 27 | 31 | 32 | 46 | 47 | 49 |
| 51 | 58 | 63 | 66 | 73 | 89 | 90 | 91 | 94 |
| 104 | 105 | 106 | 111 | 116 | 117 | 122 | 142 | 144 |
| 146 | 147 | 148 | 149 | 169 | 170 | 171 | 176 | 177 |
| 181 | 187 | 191 | 192 | 193 | 194 | 195 | 196 | 197 |
| 265 | 278 | 283 | 296 | 318 | 319 | 321 | 324 | 325 |
| 328 | 329 | 333 | 337 | 338 | 339 | 347 | 352 | 353 |
| 354 | 355 | 356 | 357 | 364 | 365 | 369 | 372 | 374 |
| 375 | 376 | 378 | 379 | 383 | 395 | 396 | 397 | 398 |
| 409 | 419 | 420 | 421 | and | 422 | | | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| II Class | 2 | 11 | 13 | 18 | 19 | 26 | 28 | 29 |
| 30 | 43 | 45 | 48 | 50 | 54 | 55 | 56 | 57 |
| 59 | 60 | 61 | 72 | 82 | 83 | 85 | 86 | 87 |
| 88 | 92 | 93 | 102 | 103 | 109 | 110 | 112 | 113 |
| 114 | 115 | 118 | 120 | 123 | 125 | 143 | 145 | 185 |
| 189 | 198 | 259 | 261 | 264 | 270 | 271 | 274 | 284 |
| 285 | 287 | 291 | 293 | 294 | 298 | 299 | 300 | 320 |
| 334 | 335 | 336 | 340 | 348 | 360 | 362 | 367 | 371 |
| 377 | 380 | 399 | and | 400 | | | | |

III Class 16 17 42 44 52 62 84
101 107 108 119 121 124 184 186 190
224 252 258 260 262 263 276 286 288
289 290 292 297 312 358 359 361 363
366 and 378

## अभिज्ञः

I Class 14 34 35 126 150 151 154 230
234 244 256 267 272 277 343 344 345
346 402 405 and 406

II Class 23 24 95 152 155 156 160
161 199 200 205 203 238 241 257 266
268 269 278 279 280 330 331 341 349
350 385 388 389 403 404 and 424

III Class 4 36 37 38 40 67 63 74
76 77 78 79 153 157 158 159 204
211 225 226 227 228 231 232 239 255
281 282 301 302 304 305 310 311 312
313 315 316 317 342 386 and 387

## विचक्षणः

I Class 214 and 242

II Class 25 65 100 135 164 245 411
412 413 414 415 416 and 417

III Class 64 136 162 163 182 212 218
215 246 247 250 351 390 391 392 393
394 and 425

## समर्थः

I class :- 166 only

II class :- 165 217 218 222 and 418

III class :- 167 and 243

## कोविदः

Passed in I Part only :- 216 only

Passed in II Part only :- 141 220 248 and 426

Passed in V Part only :- 163 only

Passed in IV and V Parts anly .- 223 only

The following candidates stood first in I class

Priges will be awarded to them in due course

Parichaya :- 328 :- S. Saethalakshmi, Mettur Dam

Abhigna :- 272. Ramavajjala Kondiah, Masulipatam

Viehakshana :- 242r Aduru Shnayajulu, Nellore

Samartha :- 166. N. Kannan, Thirunagar



## कीलक दक्षिणाध्ययनपरीक्षासु उपयुक्तानि केन्द्राणि – 37

(१) अम्बत्तूरु (२) अनन्तपुरम् (३) अनकापल्ली (४) आलगड्डा (५) इन्द्रप्रस्थम् (नवदेहली) (६) कडप (७) कांचीपुरम् (८) कोयम्बत्तूरु (९) कोंपेट (१०) गणपवरम् (११) गुण्टूरु (१२) गोपिचेट्टिपाल्यम् (१३) चित्तूरु (१४) जुत्तिग (१५) तंजावूरु (१६) तिरुनल्वेलि (१७) तिरुनगर (१८) तिरुचिरापल्ली (१९) तिरुवल्लिक्केणि (२०) त्यागरायनगर (२१ नेगनल्लरु (२२) नंदलूरु (२३) नेल्लूरु (२४) पामर्रु (२५) मत्तालयम् (२६) मचिलीपट्टणम् (२४) मधुरान्तकम् (२८) मन्नार्गुडि (२९) मेट्टूरुडाम (३०) राजमहेन्द्रवरम् (३१) विजयवाडा (३२) शाहपूर (३३) श्रीरङ्गम् (३४) सीतानगरम् (३५) सेलम् (३६) हैदराबाद(ए) (३७) हैदराबाद (बि)

### उत्तीर्णाः 336

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खण्डशः |
|---|---|---|---|---|---|---|
| परिचयः | 230 | 203 | 85 | 75 | 36 | |
| अभिज्ञः | 131 | 120 | 21 | 82 | 42 | |
| विचक्षणः | 46 | 38 | 2 | 18 | 18 | |
| समर्थः | 19 | 16 | 1 | 5 | 2 | 2 |
| कोविदः | 2 | 2 | — | — | — | 2 |
| | 428 | 379 | 109 | 175 | 98 | 4 |

सं. भा. प्र. सभा, चित्तूरु,
10—11—1968.

कौ. श्रीनिवासाचार्यः,
परीक्षामन्त्री.



## कोविदपरीक्षायां

उत्तीर्य

संस्कृतपंडितपदवीं निर्वहत !



एतत्सभीया कोविदपरीक्षा आंध्रसर्वकारेण उपाध्यायत्व-योग्या अंगीकृता । अतः तत्र उत्तीर्य पंडिता भवत ।

इति

ति. कं. तिरुवेङ्कटाचार्यः

प्रधानमन्त्री.

गैर्वाणी

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.

*R. N. 8145/60.* *Postal R. No. H. 493.*

भारतसर्वकारेण पुरस्कृता च

वार्षिकम् रू. ४-००

# प्रहेलिके

समरे हेमरेखांकं बाणं मुञ्चति राघवे ।
स रावणोपि मुमुचे मध्ये रीतिधरं शरम् ॥

(मध्ये री + इत्यक्षरकं शरं = शरीरं, अमुञ्चत, हतः)

शिलार्पितपदद्वन्द्वा नासार्पितकरद्वया ।
अभूद्व्यक्तस्तनी नारी, कथमेतत् भविष्यति ॥

अर्थः – नारी, शिलायां = अधस्ताद्दारुणि, अर्पितं = स्थापितं, पदद्वन्द्वं यस्याः सा, द्वारबन्धस्य अधोदारूपरि पादौ स्थापयित्वा स्थिता इत्यर्थः । नासायां=उपरिदारुणि, अर्पितं करद्वयं यस्या सा, बाहू उन्नमय्य ऊर्ध्वदारुमालंब्य च स्थिता इत्यर्थः । अत एव व्यक्तौ स्तनौ यस्याः सा तथाभूता अभूत इति भावः ।

——:o:——

Published by Sri N. Ramanatha Iyer, B. A., B. L. Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor, (A P) C. 1500